॥ नारायणसहस्रनामस्तोत्रं श्रीलक्ष्मीनारायणीयसंहितायाम् ॥

ॐ श्री गणेशाय नमः
श्रीकृष्ण उवाच
शृणु त्वं राधिके चान्यं चमत्कारं श्रियःपतेः ।
कुंकुमवापिकाक्षेत्रे जातं योगेश्वरं प्रति ॥ १॥

वीतिहोत्रो महोयोगी वने योगेश्वरोऽभवत् ।
हिमाचले बदर्यां स तपस्तेपेऽतिदारुणम् ॥ २॥

सर्वयोगकलाः प्राप यथा शंभुस्तथाऽभवत् ।
तेन योगप्रतापेन दृष्टा वै दिव्यचक्षुषा ॥ ३॥

केतुमाले कृता यज्ञाः केनाटेऽपि कृता मखाः ।
अमरीणां प्रदेशेषु कृतं यद्धरिणा तु तत् ॥ ४॥

ऊर्जाकृष्णाष्टमीजन्ममहोत्सवश्च यः कृतः ।
शारदापूजनाद्यं च ह्यन्नकूटमहोत्सवः ॥ ५॥

एतत्सर्वं दिव्यदृष्ट्या विज्ञाय परमेश्वरम् ।
कांभरेयं बालकृष्णं द्रष्टुं साक्षादुपाययौ ॥ ६॥

आययौ कुंकुमवापीक्षेत्रे कृष्णनारायणम् ।
सहस्ररूपधर्ताऽसौ वीतिहोत्रः समाधिमान् ॥ ७॥

मार्गशीर्षतृतीयायामश्वपट्टसरस्तटे ।
सेतुमाश्रित्य च न्यग्रोधस्याऽधोऽधान्निजासनम् ॥ ८॥

सहस्ररूपधर्ताऽसौ संकल्प्य निषसाद ह ।
मम मूलस्वरूपं चागत्याऽऽश्लिष्येत् रमापतिः ॥ ९॥

ततः सहस्ररूपैश्चाऽऽश्लिष्येन्मां स प्रभुः पुनः ।
ऋषभस्य कारयेन्ये सद्गुरोर्दर्शनं यदि ॥ १०॥

तदाऽहं श्रीहरेरग्रे निवत्स्येऽत्र सदाऽनुगः ।
मोक्षं प्रसाधयिष्येऽत्र बदर्या न प्रयोजनम् ॥ ११॥

न गुरोरपरस्यापि मोक्षदो हि गुरुर्यतः ।

यत्रात्मनो भवेत्पुष्टिर्येन तरति सागरम् ॥ १२॥

यस्माच्चात्ममहाशान्तिस्तं गुरुं त्वाश्रयेज्जनः ।
यस्मात्पापविनाशश्च यस्मादज्ञाननाशनम् ॥ १३॥

यस्माद् वृत्तिनिरोधश्च वासनाक्षपणं यतः ।
यस्मादात्मप्रकाशश्च तं गुरुं त्वाश्रयेज्जनः ॥ १४॥

यस्माच्छिक्षामवाप्यैतैश्वर्यं चमत्कृतिं तथा ।
दिव्यभावमधितिष्ठेत्तं गुरुं त्वाश्रयेज्जनः ॥ १५॥

गुरवो बहवः सन्ति लौकिकाश्चाप्यलौकिकाः ।
लौकिकेन हि लोकस्थाः कार्या वै गुरवो यथा ॥ १६॥

अलौकिकेन शिष्येणाऽलौकिका गुरवो धृताः ।
मयाऽप्यलौकिकः सोऽयं कर्तव्यो भगवान् गुरुः ॥ १७॥

यत्र सर्वं हि कर्तव्यं हरौ परिसमाप्यते ।
माता गुरुर्हि जनुदा पिता गुरुर्हि बीजदः ॥ १८॥

अन्ये रक्षाकराः सन्ति देहस्य गुरवो हि ते ।
भाषाज्ञानकराश्चान्ये बान्धवाद्याश्च योषितः ॥ १९॥

तथा शिक्षाकराश्चान्ये विद्यादानकरा अपि ।
कलाकौशल्यशिक्षाया दातारो गुरवोऽपि च ॥ २०॥

त एते देहयात्राया भवन्ति गुरवः खलु ।
आत्मज्ञानप्रदो यस्तु विष्णुमन्त्रप्रदश्च यः ॥ २१॥

धर्मवृत्तिप्रदो यश्च गुरुः श्रेष्ठो हि सम्मतः ।
ब्रह्मस्थितिप्रदो यश्च योगसिद्धिप्रदश्च यः ॥ २२॥

वैशारद्यप्रदो बुद्धौ गुरुः श्रेष्ठतरो हि सः ।
निर्मूलां वासनां कृत्वा परमेशप्रदर्शकः ॥ २३॥

आत्मना परमात्मानं प्रापको दिव्यमोक्षदः ।
ब्रह्मलोकप्रेषकश्च गुरुः श्रेष्ठतमो हि सः ॥ २४॥

गकारस्त्वन्धमज्ञानं रकारो ज्ञानमुज्ज्वलम् ।
अज्ञानहा ज्ञानदश्च गुरुर्गौरववान्मतः ॥ २५॥

गमयत्यक्षरं धाम रमयत्यपि धामिना ।
गुरुः सोऽयं मोक्षदाता नान्यः श्रेष्ठस्ततो गुरुः ॥ २६॥

गुरुर्योगी ब्रह्मचारी धर्मी ज्ञानी विरागवान् ।
साधुशीलो गुरुश्चापि नारायणः परो गुरुः ॥ २७॥

भुक्तिदाता मोक्षदाता सर्वस्वदो हरिर्गुरुः ।
गुरोः साक्षात्कारयिता गुरोर्गुरुर्यतोऽत्र सः ॥ २८॥

स एव श्रीहरिश्चाऽयं मुक्तानां परमो गुरुः ।
गुरुः सर्वावताराणां सतीनां च सतां गुरुः ॥ २९॥

ईश्वराणां तथा धाम्नां योगिनां सर्गसंविदाम् ।
पूर्वेषां सृष्टिकर्तॄणां महर्षीणां द्युवासिनाम् ॥ ३०॥

प्रजेशानां कर्मठानां भक्तानां च परो गुरुः ।
गुरूणां यावतामग्र्यो नारायणगुरोर्गुरुः ॥ ३१॥

अनादि श्रीकृष्णनारायणः श्रीकृष्णवल्लभः ।
श्रीकृष्णवल्लभः स्वापी कांभरेयः परात्परः ॥ ३२॥

श्रीमद्गोपालबालोऽयं स्वामी वै सर्वदेहिनाम् ।
मया लब्धः स मे पूर्णं करिष्यत्येव मानसम् ॥ ३३॥

निवत्स्यामि चरणेऽस्य प्राप्स्यामि धाम चाक्षरम् ।
सञ्चिन्त्येति वीतिहोत्रो ध्यानमग्नः सहस्रधा ॥ ३४॥

सहस्ररूपवान् जातो दृष्ट्वा तं मानवास्तटे ।
स्नातारोऽगुः परश्चर्यं कस्येमानि समानि वै ॥ ३५॥

रूपाणि, के चागता वै योगिनोऽत्र सहस्रशः ।
समवेषाः समदेहाः समांगाः सन्ति सदृशाः ॥ ३६॥

समकेशाः समध्यानाः समानपरिमाणकाः ।
भ्रातरो वा भवन्त्येते धाममुक्ता भवन्ति वा ॥ ३७॥

बदरीवासिनो वाऽपि श्वेतमुक्ताः किमागताः ।
शंकरस्य गणाः किंवा देवास्तापसरूपिणः ॥ ३८॥

साध्या वा देवता यद्वा मेरुवासा हि तापसाः ।
क एते तु भवेयुर्वै चन्द्रास्या भास्करप्रभाः ॥ ३९॥

ध्यानयोगा योगिनो वा योगीश्वराः सहस्रशः ।
न वदन्ति न पश्यन्ति न प्राणान् चालयन्त्यपि ॥ ४०॥

स्थिरमौनाः स्थिरचिता ईश्वराः स्युश्च केन्विमे ।
इत्येवं तर्कयन्तो वै कुंकुमवापिकाजनाः ॥ ४१॥

संघशो वै समायान्ति द्रष्टुं कुतूहलान्विताः ।
केचिन्नमन्ति दृष्ट्वैव प्रशंसन्ति वदन्ति च ॥ ४२॥

प्रतापोऽयं बालकृष्णकृपानाथस्य वर्तते ।
अस्य दर्शनलाभार्थं नित्यमायान्ति योगिनः ॥ ४३॥

अदृश्या ईदृशाः सर्वेऽधुना ते दृश्यतां गताः ।
रुद्राः सहस्रशश्चापि विष्णवश्च सहस्रशः ॥ ४४॥

सहस्रसोऽपि ब्रह्माणो द्रष्टुमायान्ति सद्वरम् ।
तथा महर्षयो नित्यं पितरो देवतास्तथा ॥ ४५॥

साध्या विश्वे च मरुतो द्रष्टुमायान्ति नित्यशः ।
तीर्थान्यपि समायान्ति दिक्पालाः सृष्टिपालकाः ॥ ४६॥

अथवा पार्षदा दिव्या गोलोकादिनिवासिनः ।
समायान्ति च वैकुण्ठपार्षदा अपि नित्यशः ॥ ४७॥

ग्रहनक्षत्रताराश्च सूर्याश्चन्द्राः सहस्रशः ।
वैमानिकाः समायान्ति लोकान्तरेभ्य आदृताः ॥ ४८॥

वालखिल्याः समायान्ति यद्वा ब्रह्मसभाद्विजाः ।
किं वा भवेयुर्गान्धर्वा यक्षा वा धनदाश्च वा ॥ ४९॥

चारणाः पर्वतवासा मुनयो वा वनस्थिताः ।

परं सादृश्यमेवैषामपूर्वत्वं विगाहते ॥ ५०॥

ललाटे वैष्णवं पुण्ड्रं मस्तके तापसी जटा ।
नेत्रमुद्रा योगपुष्टाः ख्यापयन्त्यंशमाच्युतम् ॥ ५१॥

ये वा के वा भवेयुस्ते साक्षात्कृता यदत्र ते ।
अस्माभिर्दैवयोगेन पुण्यवद्भिः सुभाग्यकैः ॥ ५२॥

अवश्यमेषां विज्ञानं क्षणेऽत्रैव भविष्यति ।
इत्येवं ते वदन्तश्च प्रजाः संघश एव ह ॥ ५३॥

प्रपश्यन्ति सरस्तीरे सहस्रयोगिनस्तदा ।
अथ श्रीमद्बालकृष्णो नारायणगुरोर्गुरू ॥ ५४॥

समाययो सरस्तीरे सन्निधौ योगिनां तदा ।
हार्दं जानँस्तदा तूर्णं प्रवीक्ष्य मूलरूपिणम् ॥ ५५॥

समुत्तोल्य समाहूय नाम्ना तं वीतिहोत्रक ! ।
उत्तिष्ठेति करौ धृत्वा कृत्वा वक्षसि योगिनम् ॥ ५६॥

समाश्लिष्यद्धसँस्तूर्णं स्वयं सहस्रधाऽभवत् ।
समुत्थितैः सहस्रस्वरूपैराश्लिष्यदच्युतः ॥ ५७॥

ततस्तूर्णं हरिश्चैकस्वरूपः सम्बभूव ह ।
वीतीहोत्रोऽपि सहसा त्वेकरूपो व्यजायत ॥ ५८॥

आश्चर्यचकिता लोका जयशब्दान् प्रचक्रिरे ।
तावच्छ्रीबालकृष्णोऽपि बभूव ऋषभो गुरुः ॥ ५९॥

वृद्धः श्वेतजटायुक्तो विवस्त्रो धूलिधूसरः ।
विचित्त इव चोन्मत्तो जितसर्वेन्द्रियो यतिः ॥ ६०॥

स्वभावतेजसा व्याप्तो ब्रह्मनिष्ठापरः पुमान् ।
अप्राकृत इव त्वास्ते विमना इव देहिषु ॥ ६१॥

वीतिहोत्रोऽपि च गुरुमृषभं वीक्ष्य दण्डवत् ।
चकार बहुधा तत्र तुष्टाव परमेश्वरम् ॥ ६२॥

त्वं गुरुस्त्वं चान्तरात्मा ऋषभस्त्वं च योगिराट् ।
योगेश्वरो भवानेव त्वं चेशस्त्वं परेश्वरः ॥ ६३॥

त्वं मुक्तस्त्वं महामुक्तो मुक्तेश्वरो भवानपि ।
अक्षरं त्वं भवान् ब्रह्म परब्रह्म भवानपि ॥ ६४॥

भगवान् कृष्ण एवासि कृष्णनारायणोऽसि च ।
अनादिश्रीकृष्णनारायणस्त्वं परमेश्वरः ॥ ६५॥

अवताराः ऋषभाद्यास्तवैव श्रीपते विभो ।
राधापतिस्त्वमेवाऽसि लक्ष्मीपतिस्त्वमेव च ॥ ६६॥

वासुदेवीपतिस्त्वं च नारायणीपतिस्तथा ।
मुक्तपतिर्ब्रह्मपतिर्धामपतिस्त्वमेव च ॥ ६७॥

महाकालस्य हेतुस्त्वं महाविष्णोश्च कारणम् ।
सदाशिवस्य हेतुस्त्वं वैराजस्य च कारणम् ॥ ६८॥

भूमा त्वं पूरुषसंज्ञः पुरुषोत्तम इत्यपि ।
ब्रह्मविष्णुमहेशानां रुद्राणां सर्जको भवान् ॥ ६९॥

देवानां लोकपालानां पितॄणां सर्जको भवान् ।
महर्षीणां यतीनां च साधूनां सर्जकः सताम् ॥ ७०॥

सतीनां कमलाद्यानां पतिः पाता च वै भवान् ।
सुराणां मानवानां च पशूनां पक्षिणां तथा ॥ ७१॥

वल्लीनां च द्रुमाणां च सर्जकस्त्वं रसप्रदः ।
कामधेनुकामवल्लीचिन्तामण्यादिसर्जकः ॥ ७२॥

यक्षरक्षःपिशाचानां सर्जकस्त्वं खचारिणाम् ।
वारिजानां वनस्थानां भूगर्भाणां प्रसर्जकः ॥ ७३॥

दैत्यानां दानवानां च सर्जकस्त्वं जनार्दनः ।
दीनानाथदरिद्रानां रक्षकः पोषको भवान् ॥ ७४॥

आश्रितानामन्नदाता शरण्यश्चार्तिदेहिनाम् ।
कामुकानां कामदाता सकामानां प्रपूरकः ॥ ७५॥

त्वं नारी त्वं नरश्चास्से त्वं गर्भस्त्वं कुमारकः
त्वं बीजं त्वं सस्यरूपस्त्वं पुष्पं फलमित्यपि ॥ ७६॥

त्वमिन्द्रस्त्वमिन्द्रियस्त्वं निद्रा त्वं जागरो भवान् ।
त्वं सुषुप्तिर्महानन्दस्त्वं प्रीतिस्त्वं रतिस्तथा ॥ ७७॥

मन्मथस्त्वं मनोजन्यो मनःसंस्थो भवानपि ।
ज्ञानं ज्ञाता ज्ञेयमेव त्वमेवाऽसि परेश्वर ॥ ७८॥

त्वम् ऋतुस्त्वं दिनं रात्रिस्त्वमुद्योगो विरामकः ।
त्वं विश्वासश्चाश्रयश्च त्वं माता च पिता गुरूः ॥ ७९॥

धनं धान्यं त्वमेवाऽसिं शक्तिर्बलं त्वमेव च ।
नीतिर्भक्तिर्वृषो रागो वैराग्यं च त्वमेव ह ॥ ८०॥

त्वं प्राणस्त्वं जीवनं च नैकधा चैकधा भवान् ।
प्रकाशस्त्वं प्रवृत्तिस्त्वं निरोधस्त्वं गुणात्मकः ॥ ८१॥

गुणातीतस्त्वमेवाऽसि सर्वसिद्धिगुणाश्रयः ।
आश्चर्यं त्वं चमत्कारस्त्वमैश्वर्यं प्रभुत्वकम् ॥ ८२॥

त्वं भूर्जलं भवाँस्तेजोऽनिलस्त्वं त्वं तथाऽनलः ।
त्वं खं त्वं मात्रकं त्वं च बुद्धिस्त्वं चैषणात्रयम् ॥ ८३॥

त्वं परीक्षा तितिक्षा त्वं त्वं बुभुक्षा मुमुक्षता ।
त्वं स्नेहस्त्वं ध्यानवृत्तिस्त्वं समाधिः परात्परः ॥ ८४॥

उपास्तिस्त्वं चित्तचैत्यं त्वं जाडयं त्वं तथाऽणुता ।
त्वं साम्यं त्वं च वैषम्यं त्वमेव सर्वमेव ह ॥ ८५॥

अहं त्वं वीतिहोत्रस्त्वं त्वं गुरूः ऋषभस्तथा ।
तवैवांऽशकलाऽऽवेशविभूतिसृष्टिजं त्विदम् ॥ ८६॥

यत् किंचिद् दृश्यते चापि भुज्यते लीयतेऽपि च ।
यस्माद् यत्र च येनापि यदर्थं च त्वमेव सः ॥ ८७॥

तस्मै कृष्णाय नाथाय ब्रह्मणे परब्रह्मणे ।

समर्पयामि चात्मानं वीतिहोत्राभिधं सदा ॥ ८८॥

दानमेव न तु न्यासं नापि कुसीदकं तथा ।
यथेष्टविनियोगार्हं समर्पयामि मां त्वहम् ॥ ८९॥

इति स्तुत्वा राधिके सम्पपात पादयोर्हरेः ।
वीतिहोत्रश्चाऽथ कृष्णस्तमुत्थापयदूर्ध्वकम् ॥ ९०॥

समाश्लिष्य पुनर्हस्तौ दत्वा तस्य च मूर्धनि ।
न्ययुंक्त वरलाभार्थं वीतिहोत्रं हरिर्यदा ॥ ९१॥

वीतिहोत्रस्तदा प्राह स्थास्येऽत्र तवपादयोः ।
अन्ते मोक्षं गमिष्यस्यक्षरं धाम तव प्रभो ॥ ९२॥

देहि वासं सदा चात्र तथास्तूवाच वै हरिः ।
राधिके तन्महत्तीर्थम् ऋषभाख्यं सरोवरे ॥ ९३॥

वीतिहोत्राभिधं तीर्थं सहस्रयोगितीर्थकम् ।
एवं नाम्ना तदेवासीत् प्रसिद्धं मोक्षदं शुभम् ॥ ९४॥

हरिर्बभूव सहसा बालकृष्णस्वरूपधृक् ।
प्रययौ च निजावासं वीतिहोत्रस्तटे स्थितः ॥ ९५॥

वटवृक्षं समाश्लिष्य तापसो जनदर्शनः ।
तत्र तीर्थे कृतस्नानाः प्राप्स्यन्ति परमां गतिम् ॥ ९६॥

योगसिद्धिमवाप्स्यन्ति योगाभ्यासं विनाऽपि च ।
राधिके तत्र संस्नान्नाशमेष्यन्ति पातकम् ॥ ९७॥

आर्द्रं शुष्कं महत्स्वल्पं परपीडाकरं च यत् ।
सर्वं नश्यति पापं तज्जलपानादपि द्रुतम् ॥ ९८॥

तत्राऽन्नदानतः स्यात्तु वाजिमेधसमं फलम् ।
ऋषभस्याऽऽलयकर्तुर्मम धामाऽक्षरं भवेत् ॥ ९९॥

इत्येवं भगवानाह राधिके तीर्थवैभवम् ।
पठनाच्छ्रवणाच्चास्य भवेत्तत्तीर्थजं फलम् ॥ १००॥

॥ इतिश्रीलक्ष्मीनारायणीयसंहितायां द्वितीये त्रेतासन्ताने वीतिहोत्रयोगेश्वराय ऋषभरूपेण सहस्ररूपेण च हरेर्दर्शनम्, ऋषभतीर्थीकरणम्, स्तुतिश्चेत्यादिनिरूपणनामा चत्वारिंशदधिकद्विशततमोऽध्यायः ॥